THE

# MṚICHCHHAKATIKA

OF

# ŚŪDRAKA

With the Commentary of Prithvidhara.

EDITED

BY

KĀS'INĀTH PĀNDURANG PARAB

REVISED BY

VASUDEV LAXMAN S'ĀSTRĪ PANS'IKAR.

Seventh Edition

PUBLISHED

BY

PĀNDURANG JĀWAJI,

PROPRIETOR OF THE 'NIRNAYA SĀGAR' PRESS,

BOMBAY.

1936

*Price* 1¼ *Rupee*

श्रीः ।

श्रीशूद्रककविविरचितं

# मृच्छकटिकम् ।

पृथ्वीधरकृतया व्याख्यया समेतम् ।

---


काशीनाथ पाण्डुरङ्ग परब

पणशीकरोपाह्वलक्ष्मणतनुजन्मा वासुदेवशर्मा च

इत्येताभ्यां संस्कृतम् ।


---


सप्तमं संस्करणम् ।

तच्च

शाके १८५७ वत्सरे

मुम्बय्यां

पाण्डुरङ्ग जावजी,

इत्येतैः स्वीये निर्णयसागरमुद्रणालयेऽङ्कयित्वा प्रकाशितम् ।

---

मूल्यं १। सपादो रूप्यकः ।

॥ श्रीः ॥

# मृच्छकटिकम् ।

प्रथमोऽङ्कः ।

पर्यङ्कग्रन्थिबन्धद्विगुणितभुजगाश्लेषसंवीतजानो-
रन्तःप्राणावरोधव्युपरतसकलज्ञानरुद्धेन्द्रियस्य ।
आत्मन्यात्मानमेव व्यपगतकरणं पश्यतस्तत्त्वदृष्ट्या
शंभोर्वः पातु शून्येक्षणघटितलयब्रह्मलग्नः समाधिः ॥ १ ॥

---

## मृच्छकटिकविवृतिः ।

शेमुषीप्रौढजीवातुर्विवृतिर्मृच्छकटिके ।
पृथ्वीधरैश्विकीर्षद्भिर्गणेशो गण्यते गुरुः ॥

तथा—

बालानां सुखबोधाय गुरूणां वचनं शुभम् ।
लिख्यते गहनेऽप्यत्र हेरम्बावनतिस्थिरैः ॥

प्रकरणं चेदम् । तस्य च लक्षणम्—'यत्र कविरात्मबुद्ध्या वस्तु शरीरं च नायकं चैव । विरचयति समुत्पाद्य तज्ज्ञेयं प्रकरणं नाम ॥ चतस्रो वृत्तयः पञ्च संधयोऽष्टौ रसादयः । प्रकरणतो नाटकं विहाय नृपनायकम्(?)'आदिशब्दात्षड्सादिग्रहणम् । नाटकादौ बहुप्रकारप्राकृतप्रपञ्चेषु चतस्र एव भाषाः प्रयुज्यन्ते—शौरसेन्यवन्तिका-प्राच्यामागध्यः । अपभ्रंशप्रपञ्चेषु चतस्र एव भाषाः प्रयुज्यन्ते—शकारीचाण्डाली-शाबरीढक्कदेशीयाः । मृच्छकटिके तु शबरपात्राभावाच्छाबरी नास्ति । प्राकृते—'मागध्यवन्तिजा प्राच्या शौरसेन्यर्धमागधी । बाह्लीका दाक्षिणात्या च सप्त भाषाः प्रकीर्तिताः ॥' महाराष्ट्र्यादयः काव्य एव प्रयुज्यन्ते । अपभ्रंशे—'शकाराभीरचाण्डालशबरद्राविडोड्रजाः । हीना वनेचराणां च विभाषाः सप्त कीर्तिताः ॥' विविधा भाषा विभाषाः । हीनपात्रप्रयोज्यत्वाद्धीनाः । वनेचराणां चेति ढक्कभाषासंग्रहः । तत्रास्मिन्प्रकरणे प्राकृतपाठकेषु सूत्रधारो नटी रदनिका मदनिका वसन्तसेना तन्माता चेटी कर्णपूरकश्चारुदत्तब्राह्मणी शोधनकः श्रेष्ठी—एते एकादश शौरसेनी-भाषापाठकाः । सूत्रधारोऽप्यत्र प्राकृतीं 'कार्यवशात्' इति वक्ष्यते । अवन्तिभाषापाठकौ वीरकचन्दनकौ । प्राच्यभाषापाठको विदूषकः । संवाहकः शकारवसन्तसेनाचारुदत्तानां चेटकत्रितयं भिक्षुश्चारुदत्तदारकः—एते षण्मागधीपाठकाः । अपभ्रंशपाठकेषु शकारीभाषापाठको राष्ट्रियः । चाण्डालीभाषापाठकौ चाण्डालौ । ढक्कभाषापाठकौ माथुरद्यूतकरौ । तथा—शौरसेन्यवन्तिजा प्राच्या—एतासु दन्त्यसकारता । तत्रावन्तिजा रेफवती लोकोक्तिबहुला । प्राच्या स्वार्थिककार-

अपि च ।

पातु वो नीलकण्ठस्य कण्ठः श्यामाम्बुदोपमः ।
गौरीभुजलता यत्र विद्युल्लेखेव राजते ॥ २ ॥

(नान्द्यन्ते ।)

**सूत्रधारः**—अलमनेन परिषत्कुतूहलविमर्दकारिणा परिश्रमेण । एवमहमार्यमिश्रान्प्रणिपत्य विज्ञापयामि—यदिदं वयं मृच्छकटिकं नाम प्रकरणं प्रयोक्तुं व्यवसिताः । एतत्कविः किल

द्विरदेन्द्रगतिश्चकोरनेत्रः परिपूर्णेन्दुमुखः सुविग्रहश्च ।
द्विजमुख्यतमः कविर्बभूव प्रथितः शूद्रक इत्यगाधसत्त्वः ॥ ३ ॥

अपि च ।

ऋग्वेदं सामवेदं गणितमथ कलां वैशिकिं हस्तिशिक्षां
ज्ञात्वा शर्वप्रसादाद्व्यपगततिमिरे चक्षुषी चोपलभ्य ।

---

प्राया । मागधी तालव्यशकारवती । शकारीचाण्डाल्योस्तालव्यशकारता । रेफस्य च लकारता । वकारप्राया ढक्कविभाषा । संस्कृतप्रायत्वे दन्त्यतालव्यसशकारद्वय-युक्ता च । 'अपार्थमक्रमं व्यर्थं पुनरुक्तं हतोपमम् । लोकन्यायविरुद्धं च शकार-वचनं विदुः ॥' अपार्थं निरर्थम् । व्यर्थं विरुद्धार्थकम् । यद्वा । निश्चितानन्वयं पदजातं वाक्यजातं चापार्थकम् । व्यर्थं निरर्थकमेव । हतोपमं व्याहतोपमम् । 'शकारप्रायभाषित्वाच्छकारो राष्ट्रियः स्मृतः । एकविद्यो विटश्चान्यो हास्यकृच्च विदूषकः ॥' स्वार्थिकः ककारः सर्वत्र । द्विवचनं चतुर्थीविभक्तिश्च नास्त्येव । द्वित्वे तु बहुवचनम् । चतुर्थ्यर्थे षष्ठी । परस्मैपदात्मनेपदविपर्ययः । पूर्वनिपाता-नियमश्च । बहुलं छन्दसो निदर्शनमप्रसिद्धच्छन्दोज्ञानार्थम् । पाठविप्लवनिरासार्थं च **पर्यङ्केत्यादि** । पर्यङ्कः पर्यङ्किका तस्य बन्धनेन द्विगुणितो यो भुजङ्गस्तस्य संबन्धेन स्थगितं जानु यस्य । आत्मनि शरीर एवोपरतं करणमिन्द्रियं यथा स्यादेवं तत्त्वदृष्ट्यानारोपितज्ञानेन शून्येक्षणे निराकारालोचने घटितोऽत्यन्तसं-बद्धो यो लयस्तत्प्रवणताविशेषस्तेन ब्रह्मणी परमे रूप आसक्तः समाधिर्ध्यान-मीशस्य वो युष्मान्रक्षतु ॥ १ ॥ [ **पात्विति** ॥ २ ॥ ] आर्यान्मान्यान्, मिश्रान-भ्यस्तबहुशास्त्रान् । चारुदत्तपुत्ररोहसेनक्रीडनार्थं षष्ठेऽङ्के उक्तं मृच्छकटम-त्रास्ति । 'अत इनिठनौ' इति ठन् । मृदः शकटिकास्मिन्निति वा बहुव्रीहिः । [ **द्विरदेन्द्रेति** । ] द्विजमुख्यतमः क्षत्रजातिश्रेष्ठः । 'त्रयो वर्णा द्विजातयः' इति स्मृतेः क्षत्रियेऽपि द्विजप्रयोगः ॥ ३ ॥ [ **ऋग्वेदमिति** । ] वेशोऽत्र कार्त्स्न्येन वेश्यापरः । तत्र भवा विद्यमाना । अध्यात्मादित्वाट्ठक् । यद्वा वेशोऽभि-निवेशाख्यो राजा तेन कृताम् । कलां चतुःषष्टिकलाप्रतिपादकं प्रबन्धम् । शर्वो महादेवः । लब्ध्वा चायुःशताब्दमभि प्रविष्ट इति जातकादिगणितद्वारा ज्ञात्वा ।

राजानं वीक्ष्य पुत्रं परमसमुदयेनाश्वमेधेन चेष्ट्वा
 लब्ध्वा चायुः शताब्दं दशदिनसहितं शूद्रकोऽग्निं प्रविष्टः ॥ ४ ॥

अपि च ।

समरव्यसनी प्रमादशून्यः ककुदं वेदविदां तपोधनश्च ।
परवारणबाहुयुद्धलुब्धः क्षितिपालः किल शूद्रको बभूव ॥ ५ ॥

अस्यां च तत्कृतौ

अवन्तिपुर्यां द्विजसार्थवाहो युवा दरिद्रः किल चारुदत्तः ।
गुणानुरक्ता गणिका च यस्य वसन्तशोभेव वसन्तसेना ॥ ६ ॥
तयोरिदं सत्सुरतोत्सवाश्रयं नयप्रचारं व्यवहारदुष्टताम् ।
खलस्वभावं भवितव्यतां तथा चकार सर्वं किल शूद्रको नृपः ॥ ७ ॥

(परिक्रम्यावलोक्य च ।) अये, शून्येयमस्मत्संगीतशाला । क नु गताः कुशीलवा भविष्यन्ति । (विचिन्त्य ।) आं, ज्ञातम् ।

शून्यमपुत्रस्य गृहं चिरशून्यं नास्ति यस्य सन्मित्रम् ।
मूर्खस्य दिशः शून्याः सर्वं शून्यं दरिद्रस्य ॥ ८ ॥

कृतं च संगीतकं मया । अनेन चिरसंगीतोपासनेन ग्रीष्मसमये प्रचण्डदिनकरकिरणोच्छुष्कपुष्करबीजमिव प्रचलिततारके क्षुधा ममाक्षिणी खटखटायेते । तद्यावद्गृहिणीमाहूय पृच्छामि, अस्ति किंचित्प्रातराशो न वेति । एषोऽस्मि भोः, कार्यवशात्प्रयोगवशाच्च प्राकृतभाषी संवृत्तः । अविद अविद भो, चिरसंगीदोवासणेण सुक्ख-

---

आगामिसूत्रधारवचनापेक्षया 'अग्निं प्रविष्टः' इत्यादिभूतकालप्रत्ययो न विरुद्ध इति मर्मज्ञाः । अग्निप्रवेशोऽपि सर्वस्वारनामके यज्ञविशेषे यथा शरभङ्गेन(ण) कृतस्तथा बोद्धव्यः ॥ ४ ॥ **समरेति** । ककुदं चिह्नभूतं प्रवीणो वा । तथा चामरः—'प्रावीण्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम्' इति । वारणो हस्ती ॥ ५ ॥ **अवन्तीति** । अवन्तिपुर्युज्जयिनी । 'अस्यां च तत्कृतौ अवन्ति–' इत्यादावस्तिद्वयानुषङ्गः ॥ ६ ॥ [**तयोरिति** ।] तयोः नीतिस्तस्य प्रचारो व्यवहारस्तं नयप्रचारम् । स्वहितं व्यवहारः ॥ ७ ॥ [**शून्यमिति** ।] चिरशून्यमिति कर्मधारयः । चिरं दीर्घः कालो निरवधिः समयः । शून्यमभिमतकार्यरहितम् । सन्मित्रस्य हि ससहायत्वे कार्यनिष्पत्तेः सदा पूर्ण इव समयोऽवभासते ॥ ८ ॥ खटिखव्यक्तानुकरणम् । संगीतकेन चक्षुषी खटखटायेते इत्यसंबद्धप्रलापेन भाविनः शकारासंबद्धभाषणस्य सूचनम् । प्रातराशः कल्यभोजनम् । कार्यवशात्प्रयो-

पोक्खरणालाइं विअ मे बुभुक्खाए मिलाणाइं अङ्गाइं । ता जाव गेहं गदुअ आणामि, अत्थि किंपि कुटुम्बिणीए उववादिदं ण वेत्ति । (परिक्रम्यावलोक्य च ।) एदं तं अह्माणं गेहम् । ता पविसामि । (प्रविश्यावलोक्य च ।) हीमाणहे । किं णु क्खु अह्माणं गेहे अण्णं विअ संविहाणअं वट्टदि । आआमितण्डुलोदअप्पवाहा रच्छा लोह-कडाहपरिवत्तणकसणसारा किदविसेसआ विअ जुअदी अहिअदरं सोहदि भूमी । सिणिद्धगन्धेण उद्दीविअन्ती विअ अहिअं बाधेदि मं बुभुक्खा । ता किं पुव्वजिदं णिहाणं उव्वण्णं भवे । आदु अहं ज्जेव बुभुक्खादो अण्णमअं जीअलोअं पेक्खामि । णत्थि किल पादरासो अह्माणं गेहे । पाणाधिअं बाधेदि मं बुभुक्खा । इध सव्वं णवं संविहाणअं वट्टदि । एक्का वण्णअं पीसेदि अवरा सुमणाइं गुम्फेदि । (विचिन्त्य ।) किं णेदम् । भोदु । कुडुम्बिणिं सद्दाविअ परमत्थं जाणिस्सम् । (नेपथ्याभिमुखमवलोक्य ।) अज्जे, इदो दाव । (क)

(क) अविद, अविद भोः, चिरसंगीतोपासनेन शुष्कपुष्करनालानीव मे बुभुक्षया म्लानान्यङ्गानि । तद्यावद्गृह गत्वा जानामि, अस्ति किमपि

गवक्षाक्षति । कार्यं बोध्यायाः स्त्रियो झटिति ज्ञानम् । यदुच्यते—'स्त्रीषु नाप्राकृतं वदेत्' इति सुकुमारत्वेन सुप्रयोगत्वं प्राकृतस्य । यदुक्तम्—'पुरिसा[1] सक्कअजप्पा पाउअगुम्फो वि होइ सुउमारो' । तथा षष्ठेऽङ्के प्रवहणविपर्यासे वीरकचन्दनकयोः कलहे संभ्रमागतवचनसंवरणार्थं भाषाव्यत्यासाच्चन्दनकस्य पाठः संस्कृतेन । तथा पञ्चमाङ्के दुर्दिने कार्यवशाद्वसन्तसेनायाः श्लोकपाठः संस्कृतेन । चारुदत्तस्य दारिद्र्यवर्णनासूचनयोग्यप्राकृतपरिग्रहः । यदाहुः—'कार्यतश्चोत्तमादीनां कार्यो भाषाव्यतिक्रमः' इति । एतत्सर्वमनेन सूचितमिति । अविद अविदेति निर्वेदे । कष्ट कष्टमित्यर्थः । 'अदृष्टाश्रुतसंप्राप्तावविदाविदभो.पदम्' इति च प्राञ्चः । मिलाणाइं म्लानानि । हीमाणहे विस्मये । किं नु खल्वस्माकं गृहेऽन्यदिव संविधानकं वर्तते । आयामो दीर्घस्तण्डुलप्रक्षालनजलप्रवाहो यत्र तादृशी रथ्या । लोहस्य कटाहो भाजनविशेषस्तत्परिवर्तनेन मार्जनेन कृष्णसारा कृततिलका युवतिवद्भूमिरधिकं शोभते । कृष्णसारा भूमिरित्यनेन चतुर्थाङ्के भवनकोष्ठकस्य विशेषसूचनम् । सिणिद्धगन्धेण स्निग्धगन्धेन । उद्दीविअन्ती विअ उद्दीप्यमानेव । तत्किं पूर्वार्जित निधानं बहुसंख्यं धनमुत्पन्नं भवेत् । आदु अथवेत्यर्थः । अहमेव बुभुक्षातोऽन्नमयम् । पाठान्तरे ओदनमयम् । जीवलोकं संसारं पश्यामि । नास्ति किल प्रातराशोऽस्माकं गृहे । प्राणाधिकं प्राणेष्वधिकं यथा स्यादेवम् । मं-

१. 'पुरुषाः सक्कृज्जल्पाः प्राकृतगुम्फोऽपि भवति सुकुमारः' इति च्छाया.

**नटी**—(प्रविश्य ।) अज्ज, इअह्मि । (क)

**सूत्रधारः**—अज्जे, साअदं दे । (ख)

**नटी**—आणवेदु अज्जो को णिओओ अणुचिट्ठीअदु त्ति । (ग)

**सूत्रधारः**—अज्जे, ('चिरसंगीदोवासणेण' इत्यादि पठित्वा ।) अत्थि किं पि अह्माणं गेहे असिदव्वं ण वेत्ति । (घ)

**नटी**—अज्ज, सव्वं अत्थि । (ङ)

**सूत्रधारः**—किं किं अत्थि । (च)

**नटी**—तं जधा—गुडोदणं घिअं दहिं तण्डुलाइं अज्जेण अत्तव्वं रसाअणं सव्वं अत्थि त्ति । एव्वं दे देवा आसासेदु । (छ)

**सूत्रधारः**—किं अह्माणं गेहे सव्वं अत्थि । आदु परिहससि । (ज)

---

कुटुम्बिन्या उपपादितं न वेति । इदं तदस्माकं गृहम् । तत्प्रविशामि । आश्चर्यम् । किं नु खल्वस्माकं गृहेऽन्यदिव संविधानकं वर्तते । आयामितण्डुलोदकप्रवाहा रथ्या लोहकटाहपरिवर्तनकृष्णसारा कृतविशेषकेव युवत्यधिकतरं शोभते भूमिः । स्निग्धगन्धेनोद्दीप्यमानेवाधिकं बाधते मां बुभुक्षा । तत्किं पूर्वार्जितं निधानमुत्पन्नं भवेत् । अथवाहमेव बुभुक्षातोऽन्नमयं जीवलोकं पश्यामि । नास्ति किल प्रातराशोऽस्माकं गृहे । प्राणाधिकं बाधते मां बुभुक्षा । इह सर्वं नवं संविधानकं वर्तते । एका वर्णकं पिनष्टि, अपरा सुमनसो ग्रथ्नाति । किंन्विदम् । भवतु । कुटुम्बिनीं शब्दाय्य परमार्थं ज्ञास्यामि । आर्ये इतस्तावत् ।

(क) आर्य, इयमस्मि । (ख) आर्ये, स्वागतं ते ।

(ग) आज्ञापयत्वार्यः को नियोगोऽनुष्ठीयतामिति ।

(घ) आर्ये, अस्ति किमप्यस्माकं गेहेऽशितव्यं न वेति ।

(ङ) आर्य, सर्वमस्ति । (च) किं किमस्ति ।

(छ) तद्यथा—गुडौदनं घृतं दधि तण्डुलाः आर्येणात्तव्यं रसायनं सर्वमस्तीति । एवं तव देवा आशासन्ताम् ।

(ज) किमस्माकं गेहे सर्वमस्ति । अथवा परिहससि ।

---

माम् । बुभुक्षा बाधते । इह सर्वं नवं संविधानकं वर्तते । एका वर्णकं कस्तूर्यादिकं समालम्भनं पिनष्टि । अपरा सुमनसः पुष्पाणि ग्रथ्नाति । इत्यनेनापि कोष्ठकस्यैव सूचनम् ॥ असिदव्वं अन्नरूपं द्रव्यम् ॥ घिअं घृतम् । अत्तव्वं रसाअणमिति आर्येणात्तव्यं रसायनमस्तीति । एवं तव देवा आशासन्तामिति संदिग्धवाक्योपन्यासः ॥

**नटी**—(स्वगतम् ।) परिहसिस्सं दाव । (प्रकाशम् ।) अज्ज, अत्थि आवणे । (क)

**सूत्रधारः**—(सक्रोधम् ।) आः अणज्जे, एव्वं दे आसा छिज्जिस्सदि । अभावं अ गमिस्ससि । जं दाणिं अहं वरण्डलम्बुओ विअ दूरं उक्खिविअ पाडिदो । (ख)

**नटी**—मरिसेदु मरिसेदु अज्जो । परिहासो क्खु एसो । (ग)

**सूत्रधारः**—ता किं उण इदं पावं विअ संविहाणअं वट्टदि । एक्का वण्णअं पीसेदि, अवरा सुमणाओ गुम्फेदि, इअं अ पञ्चवण्णकुसुमोवहारसोहिदा भूमी । (घ)

**नटी**—अज्ज उववासो गहिदो । (ङ)

**सूत्रधारः**—किं णामधेओ अअं उववासो (च)

**नटी**—अहिरूअवदी णाम । (छ)

**सूत्रधारः**—अज्जे, इहलोइओ आदु पारलोइओ । (ज)

**नटी**—अज्ज, पारलोइओ । (झ)

---

(क) परिहसिष्यामि तावत् । आर्य, अस्त्यापणे ।

(ख) आः अनार्ये, एवं तवाशा छेत्स्यति । अभावं च गमिष्यसि । यदिदानीमहं वरण्डलम्बुक इव दूरमुत्क्षिप्य पातितः ।

(ग) मर्षतु मर्षत्वार्यः । परिहासः खल्वेषः ।

(घ) तत्किं पुनरिदं नवमिव संविधानकं वर्तते । एका वर्णकं पिनष्टि, अपरा सुमनसो गुम्फति, इयं च पञ्चवर्णकुसुमोपहारशोभिता भूमिः ।

(ङ) आद्योपवासो गृहीतः । (च) किं नामधेयोऽयमुपवासः ।

(छ) अभिरूपपतिर्नाम । (ज) आर्ये, इहलौकिकोऽथवा पारलौकिकः ।

(झ) आर्य, पारलौकिकः ।

---

आर्य अस्त्यापणे वणिग्वीथ्याम् ॥ एवं तवाशा छेत्स्यति । अभावं च गमिष्यसीत्यनेन वसन्तसेनायाः प्रवहणविपर्यासमोटनयोः सूचनम् ॥ वरण्डो दीर्घकाष्ठं तस्य लम्बुकस्तत्प्रान्तनिबद्धो मृत्तिकास्थूणः । स हि द्रोण्यां पानीयोद्धारे दूरमुत्थाप्याधः पात्यते । केचिदाहुः—वरे(र)ण्ड इष्टकागृह उन्नतीभूतो दीर्घो भित्तिप्रदेशस्तत्र लम्बुकोऽवयवभूत इष्टकासंघः । सोऽपि हि संयोजनार्थं दूरमुत्थाप्यते । अनन्तरं निपतत्यपीति ॥ मर्षतु मर्षत्वार्यः । परिहासः खल्वेषः ॥ उपवासः । उपवासरूपं व्रतमित्यर्थः । अधिकरणवचनान्तोऽयम् ॥ अहिरूअवदी णाम अभिरूपपतिर्नाम ॥

**सूत्रधारः**—(सरोषम् ।) पेक्खन्तु पेक्खन्तु अज्जमिस्सा । मम-केरकेण भत्तपरिव्वएण पारलोइओ भत्ता अण्णेसीअदि । ( क )

**नटी**—अज्ज, पसीद पसीद । तुमं ज्जेव जम्मन्तरे भविस्ससि त्ति । ( ख )

**सूत्रधारः**—अअं उववासो केण दे उवदिट्ठो । ( ग )

**नटी**—अज्जस्स ज्जेव पिअवअस्सेन जूण्णवुड्ढेण । ( घ )

**सूत्रधारः**—(सकोपम् ।) आः दासीए पुत्ता जूण्णवुड्ढा, कदा णु क्खु तुमं कुविदेण रण्णा पालएण णववहूकेसहत्थं विअ सुअन्धं कप्पिज्जन्तं पेक्खिस्सम् । ( ङ )

**नटी**—पसीददु अज्जो । अज्जस्स ज्जेव पारलोइओ अअं उव-वासो । ( च ) (इति पादयोः पतति ।)

**सूत्रधारः**—अज्जे, उट्ठेहि । अधेहि एत्थ उववासे केण कज्जम् । ( छ )

---

( क ) प्रेक्षन्तां प्रेक्षन्तामार्यमिश्राः । मदीयेन भक्तपरिव्ययेन पारलौकिको भर्तान्विष्यते ।

( ख ) आर्य, प्रसीद प्रसीद । त्वमेव जन्मान्तरे भविष्यसीति ।

( ग ) अयमुपवासः केन तवोपदिष्टः ।

( घ ) आर्यस्यैव प्रियवयस्येन जूर्णवृद्धेन ।

( ङ ) आः दास्याः पुत्र जूर्णवृद्ध, कदा नु खलु त्वां कुपितेन राज्ञा पालकेन नववधूकेशहस्तमिव सुगन्धं छेद्यमानं प्रेक्षिष्ये ।

( च ) प्रसीदत्वार्यः । आर्यस्यैव पारलौकिकोऽयमुपवासः ।

( छ ) आर्य, उत्तिष्ठ । कथयात्रोपवासे केन कार्यम् ।

---

पारलौकिक इत्यनेन पालकव्युदासेन नायकान्तरलाभसूचनम् ॥ ममकेरकेण मदीयेन । भत्तपरिव्वएण भक्तपरिव्ययेन । ओदनव्ययेनेत्यर्थः । यद्वा । भर्तृपरि-त्यागेन । पारलौकिको भर्तान्विष्यते ॥ त्वमेव जन्मान्तरे भविष्यसीति ॥ अयमुपवासः केन तवोपदिष्टः ॥ आर्यस्यैव प्रियवयस्येन जूर्णवृद्धेन । आः आक्षेपे । छयं आदुत्वा आकारान्तादेशे कृते जूर्णवृद्धा इति । एवं च 'दूआ तीआ' इत्यादौ च बोद्धव्यम् । कुपितेन राज्ञा पालकेन । कप्पिन्तं छेद्यमानम् । वधूपक्षे कल्प्यमानं संस्क्रियमानम् । कदा नु खलु त्वां प्रेक्षिष्यामि(ष्ये) । नव-वधूकेशहस्तमिव वासितं सुगन्धम् । 'बज्झन्तम्' इति पाठे बध्यमानम् । अनेन संहाराङ्के चारुदत्तनिग्रहसूचनम् ॥ प्रसीदत्वार्यः । आर्यस्यैव पारलौकिकोऽयमुप-वासः । उट्ठेहि उत्तिष्ठ । कधेहि कथय । एत्थ उववासे अत्रोपवासे । केन

**नटी**—अह्मारिसजणजोग्गेण बह्मणेण उवणिमन्तिदेण । ( क )

**सूत्रधारः**—अदो गच्छदु अज्जा । अहंपि अह्मारिसजणजोग्गं बह्मणं उवणिमन्तेमि । ( ख )

**नटी**—जं अज्जो आणवेदि । ( ग ) (इति निष्क्रान्ता ।)

**सूत्रधारः**—(परिक्रम्य ।) हीमाणहे । ता कधं मए एव्वं सुसमिद्धाए उज्जइणीए अह्मारिसजणजोग्गो बह्मणो अण्णेसिदव्वो । (विलोक्य ।) एसो चारुदत्तस्स मित्तं मित्तेओ इदो जेव्व आअच्छदि । भोदु । पुच्छिस्सं दाव । अज्ज मित्तेअ, अह्माणं गेहे असिदुं अग्गणी भोदु अज्जो । ( घ )

( नेपथ्ये । )

भो, अण्णं बह्माणं उवणिमन्तेदु भवम् । वावुडो दाणिं अहम् । ( ङ )

**सूत्रधारः**—अज्ज, संपण्णं भोअणं णीसवत्तं अ । अवि अ दक्खिणा वि दे भविस्सदि । ( च )

---

( क ) अस्मादृशजनयोग्येन ब्राह्मणेनोपनिमन्त्रितेन ।

( ख ) अतो गच्छत्वार्या । अहमप्यस्मादृशजनयोग्यं ब्राह्मणमुपनिमन्त्रयामि । ( ग ) यदार्य आज्ञापयति ।

( घ ) आश्चर्यम् । तस्मात्कथं मयैवं सुसमृद्धायामुज्जयिन्यामस्मादृशजनयोग्यो ब्राह्मणोऽन्वेषितव्यः । एष चारुदत्तस्य मित्रं मैत्रेय इत एवागच्छति । भवतु । प्रक्ष्यामि तावत् । अद्य मैत्रेय, अस्माकं गृहेऽशितुमग्रणीर्भवत्वार्यः ।

( ङ ) भोः, अन्यं ब्राह्मणमुपनिमन्त्रयतु भवान् । व्यापृत इदानीमहम् ।

( च ) आर्य संपन्नं भोजनं निःसपत्नं च । अपि च दक्षिणापि ते भविष्यति ।

---

कार्यम् ॥ अह्मारिसजणजोग्गेण अस्मत्सदृश(शेन)ब्राह्मणेन । उवणिमन्तिदेण आ(उपनि)मन्त्रितेन ॥ अतो गच्छत्वार्या । अहमप्युपनिमन्त्रयामि ॥ आणवेदि आज्ञापयति ॥ ता तस्मात् । कधं कथम् । मए मया । ईदृश्यामुज्जयिन्यां समृद्धायामस्मत्सदृशो ब्राह्मणोऽन्वेषितव्यः । कोऽर्थः । यद्वा दुःस्थिता भवन्ति ब्राह्मणास्तदा चारणादीनामपि गृहे कुर्वन्ति भोजनम् । एष चारुदत्तस्य मित्रं मैत्रेयः । इदो जेव्व इत एव । आगच्छति । भवतु । इममुपनिमन्त्रयिष्ये । अद्य मैत्रेय, अस्माकं गृहे भोक्तुम् । अग्गणी अग्रणीः । प्रष्ठोऽग्रगामीति यावत् ।

(पुनर्नेपथ्ये ।)

भो, दाणिं पढमं ज्जेव पच्चादिट्ठोसि, ता को दाणिं दे णिब्बन्धो पदे पदे मं अनुबन्धेदुम् । (क)

**सूत्रधारः**—पच्चादिट्ठोम्हि एदिणा । भोदु । अण्णं बम्हणं उवणिमन्तेमि । (ख) (इति निष्क्रान्तः ।)

**इत्यामुखम् ।**

---

(प्रविश्य प्रावारहस्तः ।)

**मैत्रेयः**—('अण्णं बम्हणं' इति पूर्वोक्तं पठित्वा ) अथवा, मए वि मित्तेण परस्स आमन्तणआइं पच्छिदव्वाइं । हा अवत्थे, तुलीअसि । जो णाम अहं तत्तभवदो चारुदत्तस्स रिद्धीए अहोरत्तं पअतणसिद्धेहिं उग्गारसुरहिगन्धेहिं मोदकेहिं ज्जेव असिदो अब्भन्तरचदुस्सालअदुआए उवविट्ठो मल्लकसदपरिवुदो चित्तअरो विअ अङ्गु-

---

( क ) भोः, इदानीं प्रथममेव प्रत्यादिष्टोऽसि, तत्क इदानीं ते निर्बन्धः पदे पदे मामनुरोद्धुम् ।

( ख ) प्रत्यादिष्टोऽस्म्येतेन । भवतु । अन्यं ब्राह्मणमुपनिमन्त्रयामि ।

---

'अधिदी भोदु' इत्यपि पाठः । तत्रातिथी भवत्वित्यर्थः । भो, अण्णं अन्यम् । बम्हणं ब्राह्मणम् । उवणिमन्तेदु उपनिमन्त्रयतु भवान् । वावडो व्यापृतः । अहमिदानीं कार्यान्तरव्यासक्तः । दाणिं इदानीम् ॥ संपन्नं मृष्टम् । णिस्सवत्तं च । पितॄणां समुत्सृष्टं घृतादिसहिततण्डुलपूर्णपात्रम् । 'निःस्राव' इति यस्य प्रसिद्धिः । 'णीसवत्तं निःसपत्नम् । विपक्षस्यापरस्याभावात्' इति केचित् । अपि च दक्षिणापि ते भविष्यति । एकोऽपिः संभावनायाम्, अपरः समुच्चये । भो, दाणिं पच्चादिट्ठोसि इदानीं प्रत्यादिष्टोऽसि । को दाणिं क इदानीम् । दे णिब्बन्धो ते निर्बन्धः । मं माम् । पदे पदे अणुबन्धेदुं अनुरोद्धुम् ॥ पच्चादिट्ठोम्हि प्रत्यादिष्टोऽस्मि । एदिणा अनेन । भोदु भवतु । अण्णं अन्यम् । बम्हणं ब्राह्मणम् । उवणिमन्तेमि उपनिमन्त्रयिष्ये ॥ प्रस्तावनेत्यामुखसंधिपर्यायः । यदुक्तम्—'सूत्रधारेण सहिताः संलापं यत्र कुर्वते । नटी विदूषको वापि पारिपार्श्वक एव वा ॥ आमुखं नाम तस्यैव सैव प्रस्तावना मता ॥' प्रावारः प्रच्छदपटः । अथवा मयापि मैत्रेयेण परस्य । आमन्तणआइं आमन्त्रणकानि । पच्छिदव्वाइं समीहितव्यानि । यो नामाहं तत्रभवतश्चारुदत्तस्य समृद्ध्याहोरात्रं प्रयत्नसिद्धैरुद्गारसुरभिगन्धिभिर्मोदकैरेवाशितस्तृप्तः । मल्लकशतपरिवृतः । मल्लकः पात्रविशेषः पत्रपुटो वा । 'दोना' इति प्रसिद्धो विदूषकपक्षे । चित्रकरपक्षे वर्णिकापात्रं मल्लकः । अभ्यन्तरचतुः-

लीहिं छिविअ छिविअ अवणेमि । णअरचत्तरवुसहो विअ रोमन्थाअमाणो चिट्ठामि । सो दाणिं अहं तस्स दलिद्ददाए जहिं तहिं चरिअ गेहपारावदो विअ आवासणिमित्तं इध आअच्छामि । एसो अ अज्जचारुदत्तस्स पिअवअस्सेण जुण्णवुड्ढेण आदीकुसुमवासिदो पावारओ अणुप्पेसिदो सिद्धीकिददेवकज्जस्स अज्जचारुदत्तस्स उवणेदव्वोत्ति । ता जाव अज्जचारुदत्तं पेक्खामि । (परिक्रम्यावलोक्य च ।) एसो चारुदत्तो सिद्धिकिददेवकज्जो गिहदेवदाणं बलिं हरेन्तो इदोज्जेव आअच्छदि । (क)

(ततः प्रविशति यथानिर्दिष्टश्चारुदत्तो रदनिका च ।)

**चारुदत्तः**—(ऊर्ध्वमवलोक्य सनिर्वेदं निःश्वस्य ।)

---

(क) अथवा मयापि मैत्रेयेण परस्यामन्त्रणकानि समीहितव्यानि । हा अवस्थे, तुलयसि । यो नामाहं तत्रभवतश्चारुदत्तस्य ऋद्ध्याहोरात्रं प्रयत्नसिद्धैरुद्गारसुरभिगन्धिभिर्मोदकैरेवाशितोऽभ्यन्तरचतुःशालकद्वार उपविष्टो मल्लकशतपरिवृतश्चित्रकर इवाङ्गुलीभिः स्पृष्ट्वा स्पृष्ट्वापनयामि । नगरचत्वरवृषभ इव रोमन्थायमानस्तिष्ठामि । स इदानीमहं तस्य दरिद्रतया यत्र तत्र चरित्वा गृहपारावत इवावासनिमित्तमत्रागच्छामि । एष चार्यचारुदत्तस्य प्रियवयस्येन जूर्णवृद्धेन जातीकुसुमवासितः प्रावारकोऽनुप्रेषितः सिद्धीकृतदेवकार्यस्यार्यचारुदत्तस्योपनेतव्य इति । तद्यावदार्यचारुदत्तं पश्यामि । एष चारुदत्तः सिद्धीकृतदेवकार्यो गृहदेवतानां बलिं हरन्नित एवागच्छति

---

शालकद्वारे उपविष्टः चित्रकर इव छिविअ छिविअ स्पृष्ट्वा स्पृष्ट्वाङ्गुल्यग्रैरपनयामि न भक्षयामि । अत्यन्तं तृप्तत्वादित्यर्थः । चित्रकरोऽप्यङ्गुलीसंस्थितलेखनिकया वर्णिकाभाण्डं स्पृष्ट्वा स्पृष्ट्वापनयति विक्षिपति । अन्यथा वर्णिकाबिन्दुपातः स्यादिति । नवबद्धवृषभ इव रोमन्थायमानस्तिष्ठामि । 'आपणे नगरचत्वरवृषभ इव' इति पाठान्तरेऽपि व्याख्या । दाणिं इदानीम् । दलिद्ददाए दरिद्रतया । यत्र कुत्रापि चरित्वा गृहपारावत इवावासनिमित्तं शयनार्थमत्रागच्छामि । एसो एषः । जूर्णवृद्धेन जातीकुसुमवासितोऽनुप्रेषितः प्रावारकः । सिद्धीकिददेवकज्जस्स निष्पादितदेवकार्यस्य । पाठान्तरे तु—षष्ठीमतकृतदेवकार्यस्येत्यर्थः । आर्यचारुदत्तस्योपनेतव्यः । तद्यावत्पश्यामि । गृहदेवतानां बलिं हरन्नित एवाभिगच्छति । बलिं

यासां बलिः सपदि मद्गृहदेहलीनां
हंसैश्च सारसगणैश्च विलुप्तपूर्वः ।
तास्वेव संप्रति विरूढतृणाङ्कुरासु
बीजाञ्जलिः पतति कीटमुखावलीढः ॥ ९ ॥

(इति मन्दं मन्दं परिकम्योपविशति ।)

**विदूषकः**—एसो अज्जचारुदत्तो । ता जाव संपदं उवसप्पामि । (उपसृत्य ।) सोत्थि भवदे । वड्ढदु भवम् । (क)

**चारुदत्तः**—अये, सर्वकालमित्रं मैत्रेय प्राप्तः । सखे, स्वागतम् । आस्यताम् ।

**विदूषकः**—जं भवं आणवेदि । (उपविश्य ।) भो वअस्स, एसो दे पिअवअस्सेण जुण्णवुड्ढेण जादीकुसुमवासिदो पावारओ अणुप्पेसिदो सिद्धीकिददेवकज्जस्स अज्जचारुदत्तस्स तुए उवणेदव्वो त्ति । (ख) (समर्पयति ।)

(चारुदत्तो गृहीत्वा सचिन्त स्थित ।)

**विदूषकः**—भो, किं इद चिन्तीअदि । (ग)

**चारुदत्तः**—वयस्य,

सुखं हि दु खान्यनुभूय शोभते घनान्धकारेष्विव दीपदर्शनम् ।
सुखात्तु यो याति नरो दरिद्रतां धृत शरीरेण मृत स जीवति ॥१०॥

**विदूषकः**—भो वअस्स, मरणादो दालिद्दादो वा कदरं दे रोअदि । (घ)

---

(क) एष आर्यचारुदत्त । तद्यावत्साप्रतमुपसर्पामि । स्वस्ति भवते । वर्धतां भवान् ।

(ख) यद्भवानाज्ञापयति । भो वयस्य, एष ते प्रियवयस्येन जूर्णवृद्धेन जातीकुसुमवासित. प्रावारकोऽनुप्रेषित. सिद्धीकृतदेवकार्यस्यार्यचारुदत्तस्य त्वयोपनेतव्य इति । (ग) भो, किमिदं चिन्त्यते ।

(घ) भो वयस्य, मरणाद्दारिद्र्याद्वा कतरत्ते रोचते ।

---

पूजाम् ॥ यासामिति । कीटमुखास्वादितो बीजाञ्जलिः पतति । विरूढा उपचितास्तृणाङ्कुरा यासु ॥ ९ ॥ स्वस्ति भवते । वर्धतां भवान् ॥ किमिदं चिन्त्यते ॥ सुखमित्यादि । दु.खान्यनुभूय सुखं शोभते । न तु सुखमनुभूय दुःखमिति तात्पर्यम् । स मृत एव जीवति । शरीरेण धृतः शरीरेण वेष्टितः । चर्ममात्रावशिष्ट इत्यर्थः ॥ १० ॥ मरणादो मरणात् । दालिद्दादो दारिद्र्यात् । कदरं

**चारुदत्तः**—वयस्य,

दारिद्र्यान्मरणाद्वा मरणं मम रोचते न दारिद्र्यम् ।
अल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम् ॥ ११ ॥

**विदूषकः**—भो वअस्स, अलं संतप्पिदेण । पणइजणसंकामिद-विहवस्स सुरजणपीदसेसस्स पडिवच्चन्दस्स विअ परिक्खओ वि दे अहिअदरं रमणीओ । (क)

**चारुदत्तः**—वयस्य, न ममार्थान्प्रति दैन्यम् । पश्य ।

एतत्तु मां दहति यद्गृहमस्मदीयं
क्षीणार्थमित्यतिथयः परिवर्जयन्ति ।
संशुष्कसान्द्रमदलेखमिव भ्रमन्तः
कालात्यये मधुकराः करिणः कपोलम् ॥ १२ ॥

**विदूषकः**—भो वअस्स, एदे क्खु दासीए पुत्ता अत्थकल्लवत्ता वरडाभीदा विअ गोवालदारआ अरण्णे जहिं जहिं ण खज्जन्ति तहिं तहिं गच्छन्ति । (ख)

**चारुदत्तः**—वयस्य,

सत्यं न मे विभवनाशकृतास्ति चिन्ता
भाग्यक्रमेण हि धनानि भवन्ति यान्ति ।

---

(क) भो वयस्य, अलं संतप्तेन । प्रणयिजनसंक्रामितविभवस्य सुरजन-पीतशेषस्य प्रतिपच्चन्द्रस्येव परिक्षयोऽपि तेऽधिकतरं रमणीयः ।

(ख) भो वयस्य, एते खलु दास्याः पुत्रा अर्थकल्यवर्ता वरटाभीता इव गोपालदारका अरण्ये यत्र यत्र न खाद्यन्ते तत्र तत्र गच्छन्ति ।

---

कतरद् । रोचते प्रीतम् ॥ **दारिद्र्यादिति** । अल्पसमयदुःखदत्वान्मरणमल्पक्लेशम् । बहुसमयव्यापित्वादाकाङ्क्षितापगमाद्दारिद्र्यमनन्तकं दुःखम् ॥ ११ ॥ संतप्पिदेण संतप्तेन । प्रणयिजनसंक्रामितविभवस्य सुरजनपीतशेषस्य प्रतिपच्चन्द्रस्येव परिक्षयोऽपि तेऽधिकतरं रमणीयः । यद्यसद्व्ययेनार्थाः स्वदोषेण नाश्यन्ते तदा संतापः क्रियते । तव तु न तथेति भावः । प्रणयी जनः स्निग्धबान्धवोऽर्थी च ॥ **एतदिति** । क्षीणार्थमिति कृत्वास्मद्गृहमतिथयः संत्यजन्ति । एतन्मां दहति । कालात्यये मदसमयापगमे धनलाभसमयापगमे च ॥ १२ ॥ एदे क्खु एते खलु । दासीपुत्रा अर्थरूपप्रातराशाः । वरटा 'वीरणी' इति ख्याता । तत्रस्ताः । अरण्ये गोपालपुत्रका इव यत्र यत्र न खाद्यन्त उपभुज्यन्ते तत्र तत्र यान्ति । **सत्यमिति** । विभवनाशकृता मम चिन्ता नास्ति । कथमित्यत आह—

एतत्तु मां दहति नष्टधनाश्रयस्य
यत्सौहृदादपि जनाः शिथिलीभवन्ति ॥ १३ ॥

अपि च ।

दारिद्र्याद्ध्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसो
निस्तेजाः परिभूयते परिभवान्निर्वेदमापद्यते ।
निर्विण्णः शुचमेति शोकपिहितो बुद्ध्या परित्यज्यते
निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥ १४ ॥

**विदूषकः**—भो वअस्स, तं ज्जेव अत्थकल्लवत्तअं सुमरिअ अलं संतप्पिदेण । (क)

**चारुदत्तः**—वयस्य, दारिद्र्यं हि पुरुषस्य

निवासश्चिन्तायाः परपरिभवो वैरमपरं
जुगुप्सा मित्राणां स्वजनजनविद्वेषकरणम् ।
वनं गन्तुं बुद्धिर्भवति च कलत्रात्परिभवो
हृदिस्थः शोकाग्निर्न च दहति संतापयति च ॥ १५ ॥

तद्वयस्य, कृतो मया गृहदेवताभ्यो बलिः । गच्छ । त्वमपि चतुष्पथे मातृभ्यो बलिमुपहर ।

---

(क) भो वयस्य, तमेवार्थकल्यवर्तं स्मृत्वालं संतापितेन ।

---

भाग्यक्रमेण लब्धव्यक्रमेण धनानि भवन्ति । तर्हि चिन्ता कुत इत्यत आह— एतत्तु मां दहति यन्नष्टधनाश्रयस्य मम सौहृदादपि मैत्रीतोऽपि जनाः शिथिलीभवन्ति । अर्थशून्येन समं प्रयोजनाभावान्मैत्रीमपि न केऽपि कुर्वते ॥ १३ ॥ **दारिद्र्यादिति** । लज्जा गच्छति, अकाङ्क्षितासामर्थ्यात् यदा लज्जा गता तदा तेजसः प्रभ्रष्टो भवति, यावत्तावत्कारणात् । तेजःशून्यः परिभूयते, भयाभावात् । परिभवान्निर्वेदं गच्छति, मानम्लानेः । ततः शुचमेति, वृथा जीवनमिति । ततस्त्यज्यते बुद्ध्या । निर्बुद्धिः क्षयं गच्छति । तदुक्तम्—'बुद्धिनाशात्प्रणश्यति' इति । अत एव सर्वासामापदां स्थानमित्युपसंहरति ॥ १४ ॥ कल्लवत्तअं प्रातराशः । एतद्रूपत्वे चार्थस्य तावद्रूपद्रव्यत्वाज्जनान्तरानवगाहितत्वाच्च तद्विस्मृत्य धर्मचित्ताः साधवो भवन्तीत्याशयः ॥ **निवास इति** । चिन्ताया निवासः कथं मम निर्वाहः स्यादित्येवंरूपायाः । परस्य परिभव इति षष्ठीसमासः, कर्मधारयो वा । एतच्चाविश्वसनीयतया निर्धनानां ज्ञेयम् । जुगुप्सा मित्राणामिति, प्रत्युपकारासमर्थत्वात् । स्वजनानां बन्धूनाम्, जनानामन्येषामुदासीनानाम् । करणं कृतिः । कर्तरि करणे वा ल्युट् । भवति चेति चकारो हेतौ ।

**विदूषकः**—ण गमिस्सम् । ( क )

**चारुदत्तः**—किमर्थम् ।

**विदूषकः**—जदो एव्वं पूइज्जन्ता वि देवणा ण दे पसीदन्ति । ता को गुणो देवेसु अच्चिदेसु । ( ख )

**चारुदत्तः**—वयस्य, मा मैवम् । गृहस्थस्य नित्योऽयं विधिः ।

तपसा मनसा वाग्भिः पूजिता बलिकर्मभिः ।
तुष्यन्ति शमिनां नित्यं देवताः किं विचारितैः ॥ १६ ॥

तद्गच्छ । मातृभ्यो बलिमुपहर ।

**विदूषकः**—भो, ण गमिस्सम् । अण्णो को वि पउञ्जीअदु । मम उण बम्हणस्स सव्वं ज्जेव विपरीदं परिणमदि । आदंसगदा विअ छाआ वामादो दक्खिणा दक्खिणादो वामा । अण्णं अ एदाए पदोसवेलाए इध राअमग्गे गणिआ विडा चेडा राअवल्लहा अ पुरिसा संचरन्ति । ता मण्डूअलुद्धस्स कालसप्पस्स मूसिओ विअ अहिमुहावदिदो वज्झो दाणिं भविस्सम् । तुमं इध उवविट्ठो किं करिस्ससि । ( ग )

---

( क ) न गमिष्यामि ।

( ख ) यत एवं पूज्यमाना अपि देवता न ते प्रसीदन्ति । तत्को गुणा देवेष्वर्चितेषु ।

( ग ) भोः, न गमिष्यामि । अन्यः कोऽपि प्रयुज्यताम् । मम पुनर्ब्राह्मणस्य सर्वमेव विपरीतं परिणमति । आदर्शगतेव छाया वामतो दक्षिणो दक्षिणतो वामा । अन्यच्चैतस्यां प्रदोषवेलायामिह राजमार्गे गणिका विटाश्चेटा राजवल्लभाश्च पुरुषाः संचरन्ति । तस्मान्मण्डूकलुब्धस्य कालसर्पस्य मूषिक इवाभिमुखापतितो वध्य इदानीं भविष्यामि । त्वमिह उपविष्टः किं करिष्यसि ।

---

वनगमने कलत्रपरिभवो हेतुः ॥ १५ ॥ न गमिष्यामि ॥ एवं पूज्यमाना अपि देवाः न फलं दर्शयन्ति । तत्को गुणोऽर्चितेषु देवेषु ॥ नित्योऽयं विधिः । अकरणे प्रत्यवायात् । **तपसेति** । तुष्यन्ति परलोकमुत्कृष्टं प्रयच्छन्ति । यतः श्राद्धकृदतिथिप्रियो गृहस्थोऽपि मुच्यत इति भावः ॥ १६ ॥ अन्यः कोऽपि प्रयुज्यताम् । मम सर्वमेव विपरीतमुपनमति । आदर्शगता छायेव । आदर्शस्थप्रतिबिम्बे वामो भागो दक्षिणे दृश्यते, दक्षिणश्च वाम इति वस्तुस्थितिः । अन्यच्चैतस्यां प्रदोषवेलायामत्र राजमार्गे गणिका विटाश्चेटा राजवल्लभाः संच-

**चारुदत्तः**—भवतु । तिष्ठ तावत् । अहं समाधिं निर्वर्तयामि ।

(नेपथ्ये ।)

तिष्ठ वसन्तसेने, तिष्ठ ।

(ततः प्रविशति विटशकारचेटैरनुगम्यमाना वसन्तसेना ।)

**विटः**—वसन्तसेने, तिष्ठ तिष्ठ ।

किं त्वं भयेन परिवर्तितसौकुमार्या
नृत्यप्रयोगविशदौ चरणौ क्षिपन्ती ।
उद्विग्नचञ्चलकटाक्षविसृष्टदृष्टि-
र्व्याधानुसारचकिता हरिणीव यासि ॥ १७ ॥

**शकारः**—च्यिष्ठ वशन्तशेणिए, च्यिष्ठ ।

किं याशि धावशि पलाअशि पक्खलन्ती
वाशू पशीद ण मलिस्सशि चिट्ठ दाव ।
कामेण दज्झदि हु मे हडके तवश्शी
अङ्गाललाशिपडिदे विअ मंशखण्डे ॥ १८ ॥ (क)

**चेटः**—अज्जुके, चिट्ठ चिट्ठ ।

उत्ताशिता गच्छशि अन्तिका मे शंपुण्णपच्छा विअ गिम्हमोरी ।

---

(क) तिष्ठ वसन्तसेनिके, तिष्ठ ।

किं यासि धावसि पलायसे प्रस्खलन्ती
वासु प्रसीद न मरिष्यसि तिष्ठ तावत् ।
कामेन दह्यते खलु मे हृदयं तपस्वि
अङ्गारराशिपतितमिव मांसखण्डम् ॥

---

रन्ति । एतेन विटादीना प्रवेश सूचयति । 'नासूचितस्य प्रवेश.' इति । मण्डूकलुब्धस्येव कालसर्पस्य मुखापतितो मूषिक इव वध्यो भविष्यामि ॥ किं त्वमिति । विशदौ संचरणलाघवगुणान्वितौ । पटू इति यावत् । उद्विग्नचञ्चलकटाक्षरूपेण विसृष्टा दृष्टिर्यया सा तथा । अनुसारोऽनुगमनम् । व्याधेन यदनुगमनं तेन त्रस्ता मृगीव ॥ १७ ॥ शकारभाषायां चवर्गशिरस्थितोऽन्तस्थो यकारो लेख्यः । 'चूस्पृष्टा तालव्य' इति वचनात् । स च संयोगः प्रयत्नलाघवात्पूर्वस्य गुरुत्वं न करोति । च्यिष्ठ तिष्ठ । किं याशीत्यादि । वसन्ततिलकाच्छन्दसा श्लोकः । प्रस्खलन्ती । प्रस्खलनं निम्नोन्नतादौ गतिविघटनम् । 'बाला स्याद्वासुः' इत्यमरः । न म्रियसे । तिष्ठ तावत् । हडके हृदयम् । तवश्शी वराकः । अङ्गारराशिपतितं मांसखण्डमिव कामेन दह्यते ॥ १८ ॥ अज्जुके गणिके । उत्ताशितेत्यादि ।

ओवग्गदी शामिअभट्टके मे वण्णे गडे कुक्कडशावके व्व ॥१९॥(क)

**विटः**—वसन्तसेने, तिष्ठ तिष्ठ ।

किं यासि बालकदलीव विकम्पमाना
रक्तांशुकं पवनलोलदशं वहन्ती ।
रक्तोत्पलप्रकरकुड्मलमुत्सृजन्ती
टङ्कैर्मनःशिलगुहेव विदार्यमाणा ॥ २० ॥

**शकारः**—चिट्ठ वसन्तशेणिए, चिट्ठ ।

मम मअणमणङ्गं मम्मथं वड्ढअन्ती
णिशि अ शअणके मे णिद्दअं आक्खिवन्ती ।
पशलशि भअभीदा पक्खलन्ती खलन्ती
ममवशमणुजादा लावणश्शेव कुन्ती ॥ २१ ॥ (ख)

---

(क) आर्ये, तिष्ठ तिष्ठ ।
उत्रासिता गच्छस्यन्तिकान्मम संपूर्णपक्षेव ग्रीष्ममयूरी ।
अववल्गति स्वामिभट्टारको मम वने गतः कुक्कुटशावक इव ॥

(ख) तिष्ठ वसन्तसेने, तिष्ठ ।
मम मदनमनङ्गं मन्मथं वर्धयन्ती
निशि च शयनके मम निद्रामाक्षिपन्ती ।
प्रसरसि भयभीता प्रस्खलन्ती स्खलन्ती
मम वशमनुयाता रावणस्येव कुन्ती ॥

---

उपजातिच्छन्दसा श्लोकः । उत्रासिता गच्छस्यन्तिकान्मम । यद्वा । अत्तिका ज्येष्ठा मे भगिनी । 'अत्तिका भगिनी ज्येष्ठा' इत्यमरः । संपूर्णपक्षेव ग्रीष्ममयूरी । ओवग्गदी अववल्गति । ससंभ्रममागच्छतीत्यर्थः । शामिअभट्टके स्वामिभट्टारकः । वने गतः कुक्कुटशावक इव । गडे इति प्रथमान्तस्यैकारान्तत्वम् । 'गतमृतकृतानां डः' इति डः ॥ १९ ॥ **किं यासीति** । 'टङ्कः पाषाणदारणः' इत्यमरः । विदारणक्षणे हि निर्मला दीप्तिः प्रसरतीति । कुड्मलं कलिका । मनःशिलगुहेति । महाभारते मनःशिलशब्दोऽपि दृश्यत इति तथा प्रयुक्तः । 'मनःशिला तु कुनटी' इत्यमरः ॥ २० ॥ **मम मअणेत्यादि** । मालिनीच्छन्दसा श्लोकः । मम मदनमनङ्गं मन्मथं वर्धयन्ती निशि च शयनके मम निद्रामाक्षिपन्ती । प्रसरसि प्रगच्छसि । 'प्रखरसि दात्यूहवद्विरौषि' इति केचित् । भयभीतप्रस्खलन्ती स्खलन्ती मम वशमनुयाता रावणस्येव कुन्ती । भयभीतेति । भयशब्दोऽयमपार्थकः । मदनमनङ्गमित्यादि पुनरुक्तम् । रावणस्येव कुन्तीति हतोपमम् । तथा चोक्तम्—'आगमलिङ्गविहीनं देशकलान्यायविपरीतम् ।

**विटः**—वसन्तसेने,

किं त्वं पदैर्मम पदानि विशेषयन्ती
व्यालीव यासि पतगेन्द्रभयाभिभूता ।
वेगादहं प्रविसृतः पवनं न रुन्ध्यां
त्वन्निग्रहे तु वरगात्रि न मे प्रयत्नः ॥ २२ ॥

**शकारः**—भावे भावे,

एशा णाणकमूशिकामकशिका मच्छाशिका लाशिका
णिण्णाशा कुलणाशिका अवशिका कामस्स मञ्जूशिका ।
एशा वेशवहू शुवेशणिलआ वेशङ्गणा वेशिआ
एशे शे दश णामके मइ कले अज्जावि मं णेच्छदि ॥२३॥ (क)

---

(क) भाव भाव,
एषा नाणकमोषिकामकशिका मत्स्याशिका लासिका
निर्नासा कुलनाशिका अवशिका कामस्य मञ्जूषिका ।
एषा वेशवधूः सुवेशनिलया वेशाङ्गना वेशिका
एतान्यस्या दश नामकानि मया कृतान्यद्यापि मां नेच्छति ॥

---

व्यर्थैकार्थमपार्थं भवति हि वचनं शकारस्य ॥' इति ॥ २१ ॥ विशेषयन्ती अतिशयाना । व्याली सर्पी । प्रविसृतः प्रचलितः । वातं न निरुणध्मि । अपि तु रुणध्म्येव । नकारः काकौ ॥ २२ ॥ 'भावो विद्वान्' इत्यमरः ॥ **एशा णाणकेत्यादि** । शार्दूलविक्रीडितच्छन्दसा श्लोकः । एषा । नाणं शिवाङ्कं टङ्कादिवित्तं तस्य मोषणशीलः कामो यस्य तस्य कशिका चर्मकाष्ठिका । चौराणां किंचित्तया चोपकरणं भवति । तदत्र कशोक्ता । कशा चाश्वताडनी । चर्मसडिकोच्यते । मच्छाशिका मत्स्यभक्षिका । 'मच्छं शुष्कमांसम्' इत्येके । लाशिका नर्तकी । णिण्णाशा निम्ननासा । कुलणाशिका कुलं वंशस्तन्नाशयति पातित्यजननात् । 'णीशाशा' इति पाठे निःस्वानामाशा (?) । कुलनाशिकेत्यर्थः । नवशिकानायत्ता दानेनापि कस्याप्यायत्ता न भवति । कामस्य मञ्जूषिका पात्रविशेषः । कन्दर्पभाजनमिव । वर्तुलीभूतः काम इवेत्यर्थः । एषा वेशवधूः । 'वेशो वेश्याजनाश्रयः' इत्यमरः । सुवेशनिलया शोभनानां वेशानामलंकाराणां निलय आश्रयो यस्यां सा । वेशाङ्गना । वेशिका । वेशोऽस्यास्तीति वेशिका । एतान्यस्या दश नामकानि मया कृतानि । अद्यापि मां नेच्छति । यदि देवताया अष्टौ दश द्वादश नामानि पठ्यन्ते तदा सा प्रसन्ना भवति । इयं त्वेतावतापि न प्रसन्नेति भावः । अत्र पूर्वार्धोत्तरार्धयोः एषैषेति पुनरुक्तम्, न्यूनमधिकं वा

**विटः—**

*प्रसरसि भयविक्लवा किमर्थं प्रचलितकुण्डलघृष्टगण्डपार्श्वा ।*
*विटजननखघट्टितेव वीणाजलधरगर्जितभीतसारसीव ॥ २४ ॥*

**शकारः—**

झाणज्झणन्तबहुभूशणशद्दमिश्शं
किं दोवदी विअ पलाअशि लाममीदा ।
एशे हलामि शहशत्ति जधा हणूमे
विश्शावशुश्श बहिणिं विअ तं शुभद्दम् ॥ २५ ॥ (क)

**चेटः—**

*लामेहि अ लाणवल्लहं तो क्खाहिशि मच्छमंशकम् ।*
एदेहिं मच्छमंशकेहिं शुणआ मलअं ण शेवन्ति ॥ २६ ॥ (ख)

---

(क) झणज्झणमिति बहुभूषणशब्दमिश्रं किं द्रौपदीव पलायसे रामभीता ।
एष हरामि सहसेति यथा हनूमान्विश्वावसोर्भगिनीमिव तां सुभद्राम् ॥
(ख) रमय च राजवल्लभं ततः खादिष्यसि मत्स्यमांसकम् ।
एताभ्यां मत्स्यमांसाभ्यां श्वानो मृतकं न सेवन्ते ॥

---

कृतम् । दशेति व्यर्थम् ॥ २३ ॥ **प्रसरसीत्यादि** । प्रचलिताभ्यां कुण्डलाभ्यां गण्डयोर्घृष्टं पार्श्वं यस्याः सा । अत एव विटनखपरिमृष्टवीणातुल्या । मनोहरत्वाच्छब्दवत्त्वाद्वा वीणातुल्यत्वम् । विटसदृशौ कुण्डलौ ॥ २४ ॥ **झाणज्झणन्तेति** । वसन्ततिलकं छन्दः । झाणज्झणन्तेत्यव्यक्तानुकरणम् । अव्यक्तशब्दविशेषयुक्तबहुभूषणशब्देन मिश्रं यथा स्यादेवम् । किं द्रौपदीव पलायसे रामभीता । एष हरामि झटिति यथा हनूमान्विश्वावसोर्भगिनीमिव तां सुभद्राम् । विश्वावसोः सिद्धराजविशेषस्य न भगिनी सुभद्रा, किं तर्हि कृष्णस्य । यथा इवेति पुनरुक्तम् ॥ २५ ॥ **लामेहीत्यादि** । प्रतिपादं चतुर्दशमात्रत्वान्मात्रासमकं छन्दः । लामेहि अ रमय च । चकारो भिन्नक्रमः । राजवल्लभं चेत्यर्थः । तो षा(क्खा) हिशि ततः खादिष्यसि मत्स्यमांसकम् । 'तो इत्योकारो लघुश्छन्दोनुरोधात्' इत्याहुः । 'एओकारौ हलन्तस्थौ शुद्धौ वाप्यपदान्वितौ । दीर्घात्परौ लघू स्यातां छन्दोविच्चितिभाषया ॥' इत्युक्तम् । एदेहिं मच्छमंशकेहिं एताभ्यां मत्स्यमांसाभ्यां हेतुभ्याम् । 'मश्कलेहिं' इति पाठे मत्स्यशुष्कमांसाभ्यामित्यर्थः । ककारः स्वार्थे । शुणआ श्वानः । मृतकं न सेवन्ते । नकारः शिरश्चालने । न सेवन्ते इति न, अपि तु सेवन्त एवेत्यर्थः ॥ २६ ॥

**विटः**—भवति वसन्तसेने,

किं त्वं कटीतटनिवेशितमुद्वहन्ती
ताराविचित्ररुचिरं रशनाकलापम् ।
वक्त्रेण निर्मथितचूर्णमनःशिलेन
त्रस्ताद्भुतं नगरदैवतवत्प्रयासि ॥ २७ ॥

**शकारः**—
अम्हेहि चण्डं अहिशालिअन्ती वणे शिआली विअ कुक्कुलेहिं ।
पलाशि शिग्घं तुलिदं शवेगं शवेण्टणं मे हलअं हलन्ती ॥ २८ ॥ (क)

**वसन्तसेना**—पल्लवआ पल्लवआ, परहुदिए परहुदिए । (ख)

**शकारः**—(सभयम् ।) भावे भावे, मणुश्शे मणुश्शे । (ग)

**विटः**—न भेतव्यं न भेतव्यम् ।

**वसन्तसेना**—माहविए माहविए । (घ)

**विटः**—(सहासम् ।) मूर्ख परिजनोऽन्विष्यति ।

**शकारः**—भावे भावे, इत्थिआं अण्णेशदि । (ङ)

**विटः**—अथ किम् ।

**शकारः**—इत्थिआणं शदं मालेमि । शूले हगे । (च)

---

(क) अस्माभिश्चण्डमभिसार्यमाणा शृगालीव कुक्कुरैः ।
पलायसे शीघ्रं त्वरितं सवेगं सवृन्तं मम हृदयं हरन्ती ॥
(ख) पल्लवक पल्लवक, परभृतिके परभृतिके ।
(ग) भाव भाव, मनुष्या मनुष्याः । (घ) माधविके माधविके ।
(ङ) भाव भाव, स्त्रियमन्वेषयति ।
(च) स्त्रीणां शतं मारयामि । शूरोऽहम् ।

---

**किं त्वमिति** । वक्त्रेण लक्षिता नगरदेवतावत्प्रयासि । कीदृशेन वक्त्रेण । निर्मथितचूर्णमनःशिलातुल्येन ॥ २७ ॥ **अम्हेहि चण्डमिति** । उपेन्द्रवज्रा छन्दः । अस्माभिश्चण्डं शीघ्रमभिसार्यमाणा वने शृगालीव कुक्कुरैः । पलायसे शीघ्रं त्वरितं सवेगं शवेण्टणं सवृन्तं समूलबन्धम् । मे हलअं मम हृदयम् । हरन्ती । 'सवेन्णं सवेष्टनमित्यर्थः' इत्येके ॥ २८ ॥ पल्लवकः परभृतिका च वसन्तसेनायाः परिचारकः परिचारिका च । माधविका अपरा परिचारिका ॥ भावे भावे इति संबोधनम् । मणुश्शे मनुष्यः ॥ स्त्रीनामश्रवणेन सगर्वमाह—भाव, स्त्रियमन्वेषयति ॥ स्त्रीणां शतं मारयामि । शूले शूरः । हगे अहम् ॥ हदी हदी हा धिक्

**वसन्तसेना**—(शून्यमवलोक्य ।) हद्धी हद्धी, कधं परिअणो वि परिब्भट्टो । एत्थ मए अप्पा शअं ज्जेव रक्खिदव्वो । (क)

**विटः**—अन्विष्यतामन्विष्यताम् ।

**शकारः**—वशन्तशेणिए, विलव विलव परहुदिअं वा पल्लवअं वा शव्वं एव्व वशन्तमाशम् । मए अहिशालिअन्तीं तुमं को पलित्ताइश्शदि ।

किं भीमशेणे जमदग्गिपुत्ते कुन्तीशुदे वा दशकन्धले वा ।
एशे हगे गेण्हिय केशहत्थे दुश्शाशणश्शाणुकीर्दि कलेमि ॥२९॥

णं पेक्ख णं पेक्ख ।

अशी शुतिक्खे वलिदे अ मत्थके
　कप्पेम शीशं उद मालएम वा ।
अलं तवेदेण पलाइदेण
　मुमुक्खु जे होदि ण शे क्खु जीअदि ॥ ३० ॥ (ख)

---

(क) हा धिक् हा धिक् । कथं परिजनोऽपि परिभ्रष्टः । अत्र मयात्मा स्वयमेव रक्षितव्यः ।

(ख) वसन्तसेनिके, विलप विलप परभृतिकां वा पल्लवकं वा सर्वं व वसन्तमासम् । मयाभिसार्यमाणां त्वां कः परित्रास्यते ।

किं भीमसेनो जमदग्निपुत्रः कुन्तीसुतो वा दशकन्धरो वा ।
एषोऽहं गृहीत्वा केशहस्ते दुःशासनस्यानुकृतिं करोमि ॥

ननु प्रेक्षस्व ननु प्रेक्षस्व ।

असिः सुतीक्ष्णो वलितं च मस्तकं कल्पये शीर्षमुत मारयामि वा ।
अलं तवैतेन पलायितेन मुमूर्षुतो भवति न स खलु जीवति ॥

---

हा धिक् । विलप । किमेकदेशविलापेन सकलं वसन्तमासं वा । अत्र पक्षे एको वाशब्दः शकारवचनतया व्यर्थ एव प्रयुक्तः । अनेकार्थत्वान्निपातानामवधारणे वा । सर्वमेव वसन्तमासमित्यर्थः । को तुमं त्वां परित्रायते ॥ **किं भीमशेणे इत्यादि** । इन्द्रवज्राश्लोकः । किं भीससेनो जमदग्निपुत्रः कुन्तीसुतो वा दशकन्धरो वा । एते चत्वारः । एषोऽहं गृहीत्वा केशहस्ते दुःशासनस्यानुकृतिं करोमि ॥ २९ ॥ णं ननु । पेक्ख प्रेक्षस्व । **अशी शुतिक्खे इति** । वंशस्थेन्द्रवज्रोपेन्द्रवज्रादिभिर्द्वादशैकादशवर्णैर्विजात्युपजातिः । असिः सुतीक्ष्णो वलितो लालितः । मस्तकम् । कल्पये छिनद्मि । तव शीघ्रं मारयामि वा ॥ अलं तवैतेन पलायितेन । मुमूर्षुर्यो भवति न स खलु जीवति

**वसन्तसेना**—अज्ज, अबला क्खु अहम् । ( क )

**विटः**—अत एव म्रियसे ।

**शकारः**—अदो ज्जेव ण मालीअशि । ( ख )

**वसन्तसेना**—( स्वगतम् । ) कधं अणुणओ वि शे भअं उप्पादेदि । भोदु । एव्वं दाव । ( प्रकाशम् । ) अज्ज, इमादो किंपि अलंकरणं तक्कीअदि । ( ग )

**विटः**—शान्तम् । भवति वसन्तसेने, न पुष्पमोषमर्हत्युद्यान-लता । तत्कृतमलंकरणैः ।

**वसन्तसेना**—ता किं क्खु दाणिम् । ( घ )

**शकारः**—हगे वरपुलिशमणुश्शो वाशुदेवके कामइदव्वे । ( ङ )

**वसन्तसेना**—( सक्रोधम् । ) शन्तं शन्तम् । अवेहि । अणज्जं मन्तेशि । ( च )

**शकारः**—( सतालिकं विहस्य । ) भावे भावे, पेक्ख दाव । मं अन्त-लेण शुशिणिद्धा एशा गणिआदालिआ णम् । जेण मं भणादि—'एहि । शन्तेशि । किलिन्तेशि' त्ति हगे ण गामन्तलं ण णग-लन्तलं वा गडे । अज्जुके, शवामि भावश्श शीशं अत्तणकेहिं पा-

---

( क ) आर्य, अबला खल्वहम् । ( ख ) अत एव न मार्यसे ।

( ग ) कथमनुनयोऽप्यस्य भयमुत्पादयति । भवतु । एवं तावत् । आर्य, अस्मात्किमप्यलंकरणं तर्क्यते । ( घ ) तर्त्किं खल्विदानीम् ।

( ङ ) अहं वरपुरुषमनुष्यो वासुदेवः कामयितव्यः ।

( च ) शान्त शान्तम् । अपेहि । अनार्यं मन्त्रयसि ।

---

॥ ३० ॥ अबला खल्वहम् ॥ अत एव म्रियसे जीवसि । बलवान्धारयितुं न शक्यत एवेति तात्पर्यम् ॥ अत एव न मार्यसे ॥ तक्कीअदि अन्विष्यते ॥ कृतं निःफलमलंकरणैः । यत उद्यानलता पुष्पमोषं नार्हति ॥ अहं वरपुरुषमनुष्यो वासुदेवः कामयितव्य इति तर्क्यत इत्याशयः ॥ सन्तं शान्तम् । अनार्यमनर्हम् ॥ सतालिकम् । विटस्य हस्ते तालदानं कृत्वेत्यर्थः । भाव, प्रेक्षस्व तावत् । मं अन्तरेण । 'मयीत्यर्थः' इत्येके । अन्तरेण चित्तेन अन्योन्यं सुस्निग्धैषा गणिकादारिका ननु । येन मां भणति—'एहि । श्रान्तोऽसि । क्लान्तोऽसि ।' हगे अहं न ग्रामान्तरगतो न नगरान्तरागतः । ग्रामान्तरागतो नगरान्तरगतश्च श्रान्तः क्लान्तश्च भवति । न त्वहमीदृश इत्याशयः । अज्जुके भट्टालिके । भावस्य

देहिं । तव जेव पश्चाणुपश्चिआए आहिण्डन्ते शन्ते किलिन्ते म्हि शंवुत्ते । ( क )

**विटः**—( स्वगतम् । ) अये, कथं शान्तमित्यभिहिते श्रान्त इत्यवगच्छति मूर्खः । ( प्रकाशम् । ) वसन्तसेने, वेशवासविरुद्धमभिहितं भवत्या । पश्य ।

तरुणजनसहायश्चिन्त्यतां वेशवासो
विगणय गणिका त्वं मार्गजाता लतेव ।
वहसि हि धनहार्यं पण्यभूतं शरीरं
सममुपचर भद्रे सुप्रियं चाप्रियं च ॥ ३१ ॥

अपि च ।

वाप्यां स्नाति विचक्षणो द्विजवरो मूर्खोऽपि वर्णाधमः
फुल्लां नाम्यति वायसोऽपि हि लतां या नामिता बर्हिणा ।
ब्रह्मक्षत्रविशस्तरन्ति च यया नावा तयैवेतरे
त्वं वापीव लतेव नौरिव जनं वेश्यासि सर्वं भज ॥ ३२ ॥

**वसन्तसेना**—गुणो क्खु अणुराअस्स कारणम्, ण उण बलक्कारो । ( ख )

---

( क ) भाव भाव, प्रेक्षस्व तावत् । मामन्तरेण सुस्निग्धैषा गणिकादारिका ननु । येन मां भणति–'एहि । श्रान्तोऽसि । क्लान्तोऽसि' इति । अहं न ग्रामान्तरं न नगरान्तरं वा गतः भट्टालिके, शपे भावस्य शीर्षमात्मीयाभ्यां पादाभ्याम् । तवैव पृष्ठानुपृष्ठिकयाहिण्डमानः श्रान्तः क्लान्तोऽस्मि संवृत्तः ।

( ख ) गुणः खल्वनुरागस्य कारणम्, न पुनर्बलात्कारः ।

---

विटस्य । शीर्षेणात्मीयाभ्यां पादाभ्यां शपे । यदग्रे वक्ष्यमाणं तत्सत्यमित्यर्थः । तवैव पृष्ठानुपृष्ठिकया । आहिण्डन्ते उद्भ्राम्यन् । श्रान्तः क्लान्तोऽस्मि संवृत्तः ॥ **तरुणेत्यादि** । वेशो वेश्याजनवासस्थानम् ॥ ३१ ॥ **वाप्यामित्यादि** । नाम्यति नमयति । नाम्यतीति कण्वादिपाठात् 'नामं करोति' इत्यर्थे यक्यकारलोपे च रूपम् । यथा मगधशब्दे मागध्यतीति भवति । नामं करोतीत्यर्थे णिचि 'संज्ञापूर्वको विधिरनित्यः' इति गुणमकृत्वा यणादेशे नाम्यतीति रूपम्' इत्येके । 'ण्यन्तात्संपदादिपाठमभ्युपेत्य क्विपि क्यचि रूपम्' इत्यपरे ॥ ३२ ॥ गुणः खल्वनुरागस्य

**शकारः**—भावे भावे, एशा गब्भदाशी कामदेवाअदणुज्जाणादो पहुदि ताह दलिद्दचालुदत्ताह अणुलत्ता ण मं कामेदि । वामदो तश्श घलम् । जधा तव मम अ हत्थादो ण एशा पलिब्भंशदि तधा कलेदु भावे । ( क )

**विटः**—( स्वगतम् । ) यदेव परिहर्तव्यं तदेवोदाहरति मूर्खः । कथं वसन्तसेनार्यचारुदत्तमनुरक्ता । सुष्ठु खल्विदमुच्यते—'रत्नं रत्नेन संगच्छते' इति । तद्गच्छतु । किमनेन मूर्खेण । ( प्रकाशम् । ) काणेलीमातः, वामतस्तस्य सार्थवाहस्य गृहम् ।

**शकारः**—अध इं । वामदो तश्श घलम् । ( ख )

**वसन्तसेना**—( स्वगतम् । ) अम्महे । वामदो तश्श गेहं त्ति जं शच्चम्, अवरज्झन्तेण वि दुज्जणेण उवकिदम्, जेण पिअशङ्गमं पाविदम् । ( ग )

**शकारः**—भावे भावे, बलिए क्खु अन्धआले माशलाशिपविट्ठा विअ मशिगुडिआ दीशन्दी ज्जेव पणट्ठा वशन्तशेणिआ । (घ)

**विटः**—अहो, बलवानन्धकारः । तथाहि ।

आलोकविशाला मे सहसा तिमिरप्रवेशविच्छिन्ना ।

---

( क ) भाव भाव, एषा गर्भदासी कामदेवायतनोद्यानात्प्रभृति तस्य दरिद्रचारुदत्तस्यानुरक्ता न मां कामयते । वामतस्तस्य गृहम् । यथा तव मम च हस्तान्नैषा परिभ्रश्यति तथा करोतु भावः ।

( ख ) अथ किम् । वामतस्तस्य गृहम् ।

( ग ) आश्चर्यम् । वामतस्तस्य गृहमिति यत्सत्यम्, अपराध्यतापि दुर्जनेनोपकृतम्, येन प्रियसंगमः प्रापितः ।

( घ ) भाव भाव, बलीयसि खल्वन्धकारे माषराशिप्रविष्टेव मसीगुटिका दृश्यमानैव प्रनष्टा वसन्तसेना ।

---

कारणम्, न पुनर्बलात्कारः ॥ गर्भदासी जन्मप्रभृतिचेटी । तहा तस्य । वामतः पार्श्वे तस्य चारुदत्तस्य गृहम् । ततो यथा तव मम च हस्तान्नैषा प्रभ्रश्यति तथा करोतु भावः ॥ परिहर्तव्यम् । चारुदत्तवासोऽतिनिकट इति वसन्तसेनायाः कथयितुं नार्हतीति तदेव च तेनोक्तम् । तद्वचनं परिहारविषयः । काणेलीमातः । 'काणेली कन्यकामाता' इति देशीप्रकाशः । 'असती काणेली' इत्येके ॥ भाव, बलीयानन्धकारः । माषराशिप्रविष्टेव मसीगुटिका दृश्यमानैव प्रनष्टा वसन्तसेना ॥

उन्मीलितापि दृष्टिर्निमीलितेवान्धकारेण ॥ ३३ ॥

अपि च ।

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥ ३४ ॥

**शकारः**—भावे भावे, अण्णेशामि वशन्तशेणिअम् । ( क )

**विटः**—काणेलीमातः, अस्ति किंचिच्चिह्नं यदुपलक्षयसि ।

**शकारः**—भावे भावे, किं विअ । ( ख )

**विटः**—भूषणशब्दं सौरभ्यानुविद्धं माल्यगन्धं वा ।

**शकारः**—शुणामि मल्लगन्धम्, अन्धआलपुलिदाए उण णाशिआए ण शुव्वत्तं पेक्खामि भूशणशद्दम् । ( ग )

**विटः**—( जनान्तिकम् । ) वसन्तसेने,

कामं प्रदोषतिमिरेण न दृश्यसे त्वं
सौदामनीव जलदोदरसधिलीना ।
त्वां सूचयिष्यति तु माल्यसमुद्भवोऽयं
गन्धश्च भीरु मुखराणि च नूपुराणि ॥ ३५ ॥

श्रुतं वसन्तसेने ।

**वसन्तसेना**—( स्वगतम् । ) सुदं गहिदं अ । ( नाट्येन नूपुराण्युत्सार्य माल्यानि चापनीय किंचित्परिक्रम्य हस्तेन परामृश्य । ) अम्मो, भित्ति-

---

( क ) भाव भाव, अन्विष्यामि वसन्तसेनिकाम् ।

( ख ) भाव भाव, किमिव ।

( ग ) शृणोमि माल्यगन्धम्, अन्धकारपूरितया पुनर्नासिकया न सुव्यक्त पश्यामि भूषणशब्दम् ।

---

**आलोकेति** । आलोके दर्शने । विशाला महती ॥ ३३ ॥ **लिम्पतीत्यादि** । ॥ ३४ ॥ भाव, अन्विष्यामि वसन्तसेनाम् ॥ चिह्नं भूषणशब्दादि । उपलक्षणं माल्यगन्धादि । 'अस्ति किंचिच्चिह्नमुपलक्षयसि' इति पाठान्तरार्थो व्यक्त एव ॥ किं विअ । कीदृशमिवेत्यर्थः ॥ शृणोमि माल्यगन्धम्, अन्धकारपूरितया पुनर्नासिकया न सुव्यक्तं पश्यामि भूषणशब्दम् । 'शुणामि मल्लगन्धम्' इत्यादिना लोकविरुद्धोक्तिः ॥ **काममित्यादि** ॥ ३५ ॥ श्रुतमवधारितम् ॥ गृहीतमस्य तात्पर्यमप्याकलितम् । अये मातः, भित्तिपरामर्शसूचितं पक्षद्वारं

परामरिससूइदं पक्खदुआरअं क्खु एदम् । जाणामि अ संजोएण गेहस्स संवुद पक्खदुआरअम् । ( क )

**चारुदत्तः**—वयस्य, समाप्तजपोऽस्मि । तत्साम्प्रत गच्छ । मातृभ्यो बलिमुपहर ।

**विदूषकः**—भो, ण गमिस्सम् ( ख )

**चारुदत्तः**—धिक्कष्टम् ।

दारिद्र्यात्पुरुषस्य बान्धवजनो वाक्ये न सतिष्ठते
　सुस्निग्धा विमुखीभवन्ति सुहृद स्फारीभवन्त्यापद ।
सत्त्व ह्रासमुपैति शीलशशिन कान्ति परिम्लायते
　*पाप कर्म च यत्परैऽपि कृत तत्तस्य संभाव्यते ॥ ३६ ॥*

अपि च ।

सङ्ग नैव हि कश्चिदस्य कुरुते सभाषते नादरा-
　त्सम्प्राप्तो गृहमुत्सवेषु धनिना सावज्ञमालोक्यते ।
दूरादेव महाजनस्य विहरत्यल्पच्छदो लज्जया
　मन्ये निर्धनता प्रकाममपर षष्ठ महापातकम् ॥ ३७ ॥

अपि च ।

दारिद्र्य शोचामि भवन्तमेवमस्मच्छरीरे सुहृदित्युषित्वा ।
विपन्नदेहे मयि मन्दभाग्ये ममेति चिन्ता क्व गमिष्यसि त्वम् ॥३८॥

( क ) श्रुत गृहीत च । अहो, भित्तिपरामर्शसूचित पक्षद्वारक खल्वेतत् । जानामि च सयोगेन गेहस्य सवृत्त पक्षद्वारकम् ।

( ख ) भो , न गमिष्यामि ।

---

खल्वेतत् । जानामि सयोगेन स्पर्शनेन्द्रियानुभवेन गृहस्य सवृत पक्षद्वारकम् ॥ **दारिद्र्यादित्यादि** । बान्धवजनो वाक्ये न सतिष्ठति । वचन न करोतीत्यर्थः । प्रतापाभावात् । स्फारीभव त्येकीभवन्ति । तत्तस्य संभाव्यते चौर्यादिकमिदमस्य नासीदिनानीं कथमित्यादि ॥ ३६ ॥ **सङ्गमित्यादि** । अल्पच्छदो वस्त्रविहीन ॥ ३७ ॥ **दारिद्र्येति** । भवन्तमेवं शोचामि । विनष्टदेहे मयि क्व यास्यसि । अस्मत्सदृक्सार्वदिक सुहृत्कोऽपि नास्तीत्यर्थः । अर्थपरत्वात्पुलिङ्गत्वम् । यद्वा 'तमेव भवमुत्पत्तिं स्मरामि' इति कुव्याख्या । सुहृन्मित्रम् । अतो हेतो मयि विनष्टदेहे क्व यास्यसि त्वमिति मे चारुदत्तस्य चिन्ता ॥ ३८ ॥

**विदूषकः**—(सवैलक्ष्यम् ।) भो वअस्स, जइ मए गन्तव्वम्, ता एसा वि मे सहाइणी रदणिआ भोदु । (क)

**चारुदत्तः**—रदनिके, मैत्रेयमनुगच्छ ।

**चेटी**—जं अज्जो आणवेदि । (ख)

**विदूषकः**—भोदि रदणिए, गेण्ह बलिं पदीवं अ । अहं अपावुदं पक्खदुआरअं करेमि । (ग) (तथा करोति ।)

**वसन्तसेना**—मम अब्भुववत्तिणिमित्तं विअ अवावुदं पक्खदुआरअम् । ता जाव पविसामि । (दृष्ट्वा ।) हद्धी हद्धी । कधं पदीवो । (घ) (पटान्तेन निर्वाप्य प्रविष्टा ।)

**चारुदत्तः**—मैत्रेय, किमेतत् ।

**विदूषकः**—*अवावुदपक्खदुआरएण पिण्डीभूदेण वादेण णि*व्वाविदो पदीवो । भोदि रदणिए, णिक्कम तुमं पक्खदुआरएण । अहंपि अब्भन्तरचदुस्सालादो पदीवं पज्जालिअ आअच्छामि । (ङ) (इति निष्क्रान्तः ।)

**शकारः**—भावे भावे, अण्णेशामि वशन्तशेणिअम् । (च)

**विटः**—अन्विष्यतामन्विष्यताम् ।

**शकारः**—(तथा कृत्वा ।) भावे भावे, गहिदा गहिदा । (छ)

---

(क) भो वयस्य, यदि मया गन्तव्यम्, तदेषापि मम सहायिनी रदनिका भवतु । (ख) यदार्य आज्ञापयति ।

(ग) भवति रदनिके, गृहाण बलिं प्रदीपं च । अहमपावृतं पक्षद्वारकं करोमि ।

(घ) ममाभ्युपपत्तिनिमित्तमिवापावृतं पक्षद्वारकम् । तद्यावत्प्रविशामि । हा धिक् हा धिक् । कथं प्रदीपः ।

(ङ) अपावृतपक्षद्वारेण पिण्डीभूतेन वातेन निर्वापितः प्रदीपः भवति रदनिके, निष्काम त्वं पक्षद्वारकेण । अहमप्यभ्यन्तरचतुःशालातः प्रदीपं प्रज्वाल्यागच्छामि ।

(च) भाव भाव, अन्वेषयामि वसन्तसेनिकाम् ।

(छ) भाव भाव, गृहीता गृहीता ।

---

सहाइणी द्वितीया ॥ अपावुदं अपावृतम् ॥ अभ्युपपत्तिरनुग्रहः । स्थगितद्वारेणापसरणाभावात्पिण्डीभूतेनैकीभूतेन प्रतिबन्धकत्वात् । अपावृते पक्षद्वारे सति

**विटः**—मूर्ख, नन्वहम् ।

**शकारः**—इदो दाव भविअ एअन्ते भावे चिट्ठदु । (पुनरन्विष्य चेटं गृहीत्वा ।) भावे भावे, गहिदा गहिदा । (क)

**चेटः**—भट्टके, चेडे हगे । (ख)

**शकारः**—इदो भावे, इदो चेडे । भावे चडे, चेडे भावे । तुम्हे दाव एअन्ते चिट्ठ । (पुनरन्विष्य रदनिकां केशेषु गृहीत्वा ।) भावे भावे, शंपदं गहिदा गहिदा वशन्तशेणिआ ।

अन्धआले पलाअन्ती मल्लगन्धेण शूइदा ।
केशविन्दे पलामिट्टा चाणक्केणेव्व दोवदी ॥ ३९ ॥ (ग)

**विटः**—

एषासि वयसो दर्पात्कुलपुत्रानुसारिणी ।
केशेषु कुसुमाढ्येषु सेवितव्येषु कर्षिता ॥ ४० ॥

**शकारः**—

एशाशि वाशू शिलशि ग्गहीदा केशेशु वालेशु शिलोलुहेशु ।
अक्कोश विक्कोश लवाहिचण्डं शंभुं शिवं शंकलमीश्शलं वा ॥४१॥ (घ)

---

(क) इतस्तावद्भूत्वा एकान्ते भावस्तिष्ठतु । भाव भाव, गृहीता गृहीता।

(ख) भट्टारक, चेटोऽहम् ।

(ग) इतो भावः, इतश्चेटः । भावश्चेटः, चेटो भावः । युवां तावदेकान्ते तिष्ठतम् । भाव भाव, सांप्रतं गृहीता गृहीता वसन्तसेनिका ।

अन्धकारे पलायमाना माल्यगन्धेन सूचिता ।
केशवृन्दे परामृष्टा चाणक्येनेव द्रौपदी ॥

(घ) एषासि वासु शिरसि गृहीता केशेषु बालेषु शिरोरुहेषु ।
आक्रोश विक्रोश लपाधिचण्डं शंभुं शिवं शंकरमीश्वरं वा ॥

---

निर्वापितो दीपः ॥ भाव, गृहीता प्राप्ता ॥ तत इत एकप्रदेशे भूलैकान्ते हे भाव, तिष्ठ ॥ भट्टारक, चेटोऽहम् ॥ इदो भाव इत्यादि भ्रमव्युदासाय सुनिश्चयं करोति । युवां द्वावपि तावदेकान्ते तिष्ठतम् । संपदं सांप्रतम् । **अन्धआले इत्यादि ।** अनुष्टुप् । अन्धकारे पलायमाना माल्यगन्धेन सूचिता । केशवृन्दे परामृष्टा चाणक्येनेव द्रौपदी ॥ ३९ ॥ **एषेति** । कुलपुत्रानुसारिणी चारुदत्तानुरक्ता । सेवितव्येष्वलंकार्येषु ॥ ४० ॥ **एशाशि वाशू इति** । इन्द्रवज्रायाः श्लोकः । एषासि बाला शिरसि केशेषु बालेषु शिरोरुहेषु गृहीता । आक्रोश विक्रोश लप । अधिचण्डमत्युच्चैः । हिशब्द एव वा । चण्डं महादेवं च शंभुं शिवं शंकर-

**रदनिका**—( सभयम् । ) किं अज्जमिस्सेहिं ववसिदम् । ( क )

**विटः**—काणेलीमातः, अन्य एवैष स्वरसंयोगः ।

**शकारः**—भावे भावे, जधा दहिशरपलिलुद्धाए मज्जालिए शलपलिवत्ते होदि, तधा दाशीए धीए शलपलिवत्ते कडे । ( ख )

**विटः**—कथं स्वरपरिवर्तः कृतः । अहो चित्रम् । अथवा किमत्र चित्रम् ।

इयं रङ्गप्रवेशेन कलानां चोपशिक्षया ।
वञ्चनापण्डितत्वेन स्वरनैपुण्यमाश्रिता ॥ ४२ ॥

(प्रविश्य ।)

**विदूषकः**— ही ही भोः, पदोसमन्दमारुदेण पशुबन्धोवणीदस्स विअ छागलस्स हिअअम् फुरफुराअदि पदीवो । (उपसृत्य रदनिकां दृष्ट्वा ।) भो रदणिए । ( ग )

**शकारः**—भावे भावे, मणुश्शे मणुश्शे । ( घ )

**विदूषकः**—जुत्तं णेदम्, सरिसं णेदम्, जं अज्जचारुदत्तस्स दलिद्ददाए संपदं परपुरिसा गेहं पविशन्ति । ( ङ )

**रदनिका**—अज्ज मित्तेअ, पेक्ख मे परिहवम् । ( च )

---

( क ) किमार्यमिश्रैर्व्यवसितम् ।

( ख ) भाव भाव, यथा दधिसरपरिलुब्धाया मार्जारिकायाः स्वरपरिवृत्तिर्भवति, तथा दास्याः पुत्र्या स्वरपरिवृत्तिः कृता ।

( ग ) आश्चर्यं भोः, प्रदोषमन्दमारुतेन पशुबन्धोपनीतस्येव छागलस्य हृदयम्, फुरफुरायते प्रदीपः । भो रदनिके ।

( घ ) भाव भाव, मनुष्यो मनुष्यः ।

( ङ ) युक्तं नेदम्, सदृशं नेदम्, यदार्यचारुदत्तस्य दरिद्रतया सांप्रतं परपुरुषा गेहं प्रविशन्ति । ( च ) आर्य मैत्रेय, प्रेक्षस्व मे परिभवम् ।

---

मीश्वरं वा ॥ ४१ ॥ आर्यमिश्रैर्मान्यैः । व्यवसितमारब्धम् । भाव, यथा दधिमफलुब्धायां मार्जारिकायां स्वरपरिवृत्तिर्भवति तथैतया स्वरपरिवृत्तिः कृता । 'दहिशर' इति पाठे 'छल्लि' इति पाठेऽपि शरो दध्न उपरिभागः ॥ इयमिति ॥ ४२ ॥ ही ही भो इति परितोषे । पशुबन्धोपनीतस्येव छागलस्य हृदयं फुरफुरायति अत्यर्थं प्रकम्पते प्रदीपः ॥ जुत्तं णेदम् । नः काकौ । सदृशं नेदम् । संपदं सांप्रतम् ॥

